ततस्तत्सरसि स्नातुं प्राप्तेन मुनिसूनुना ।
हारीतनाम्ना नीतोऽहं कृपया स्वतपोवनम् ॥ १२ ॥
जाबालिर्जनकस्तस्य तत्राब्जज इवापरः ।
स सर्वान्विस्मितः प्राह मामालोक्य महामुनिः ॥ १३ ॥
स्वस्यैव कर्मणः पाकं स्नेहादनुभवत्यसौ ।
श्रुत्वैतन्मुनयः सर्वे पप्रच्छुर्मम चेष्टितम् ॥ १४ ॥
सोऽब्रवीदुज्जयिन्याख्या पुरी रम्यास्त्यवन्तिषु ।
विधातुर्विविधाश्चर्यनिधानानामिवावधिः ॥ १५ ॥
तारापीडाभिधस्तस्यां बभूवावनिवासवः ।
देवी विलासवत्यस्य शुकनासश्च मन्त्रवित् ॥ १६ ॥
निरपत्यतयार्तायाः पत्न्याः शोकेन दुःखितः ।
स्वप्नेऽपश्यत्स तद्वक्त्रं प्रविशन्तं निशाकरम् ॥ १७ ॥
विलासवत्यथानन्दमिवासूत जनप्रियम् ।
चन्द्रसंदर्शनात्स्वप्ने चन्द्रापीडाभिधं सुतम् ॥ १८ ॥
पत्नी च शुकनासस्य पुत्रं प्राप मनोरमा ।
वैशम्पायननामानं स्वप्नेऽब्जप्राप्तिसूचितम् ॥ १९ ॥
कुमारस्याप्तविद्यस्य जनन्याः शासनादभूत् ।
कन्यका पत्रलेखाख्या ताम्बूलदलवाहिनी ॥ २० ॥
यौवराज्याभिषेकार्द्रः कुमारः सोऽथ शक्तिमान् ।
वर्षत्रयं महासेनः पृथ्वीं बभ्राम दिग्जयी ॥ २१ ॥
कदाचिदुत्तराशान्ते मृगयार्थी चचार सः ।
अब्धिजन्मानमारुह्य हयमिन्द्रायुधाभिधम् ॥ २२ ॥
स दृष्ट्वा किंनरद्वन्द्वं मनोहरतराकृति ।
वेगाज्जिघृक्षन्नाशासीलङ्घितां विपुलां भुवम् ॥ २३ ॥
तस्मिन्वने तु दीर्घाध्वश्रान्तः कैलासभूभृतः ।
प्रापाच्छोदं सरः पार्श्वे स्फटिकस्वच्छसुन्दरम् ॥ २४ ॥

आश्वासिताश्वः सलिलैस्तत्र शुश्राव सुस्वरम् ।
दूराद्गीतध्वनिं त्यक्तग्रासैराकर्णितं मृगैः ॥ २५ ॥
गत्वा सुदूरं सोऽपश्यच्चतुर्मुखशिवालये ।
कन्यां मूर्तिमतीं शंभोश्चूडाचन्द्रकलामिव ॥ २६ ॥
दृष्ट्वोपवीणयन्तीं तां ततस्तद्विरतौ शनैः ।
सोऽपृच्छज्जन्मवृत्तान्तं निवेद्य स्वकथां पुरः ॥ २७ ॥
सा नाम्ना प्राह हंसोऽस्ति गन्धर्वाधिपतिर्गिरौ ।
हेमकूटे स मां गौर्यां महाश्वेतामजीजनत् ॥ २८ ॥
सरः स्नातुमिदं मात्रा सह संप्राप्तया मया ।
दृष्टौ मुनिसुतौ कान्तौ पुण्डरीककपिञ्जलौ ॥ २९ ॥
पुण्डरीकः स मे कर्णे स्वकर्णाद्दिव्यमञ्जरीम् ।
चकार कौतुकार्तायाश्चित्तवृत्तिं जहार च ॥ ३० ॥
आहूता छत्रधारिण्या ततोऽहं मातुराज्ञया ।
नाज्ञासिषं स्वभवनं प्राप्य काहमिदं च किम् ॥ ३१ ॥
तदीयसुहृदाभ्येत्य मन्मथव्यग्रता तदा ।
तथा मे कथिता तस्य गताहं तत्पदं यथा ॥ ३२ ॥
गत्वा व्यसुं प्रियं दृष्ट्वा तत्राहं मरणोद्यता ।
भविता प्रियलाभस्ते भीर्मेत्युक्त्वा सुधांशुना ॥ ३३ ॥
पुण्डरीकं गृहीत्वेन्दौ प्रयाते सकपिञ्जले ।
स्थितास्मि न सहे दाहं तद्ध्यानव्रतसंयुता ॥ ३४ ॥
सुहृच्चित्ररथाख्योऽस्ति गन्धर्वेन्द्रः पितुर्मम ।
मदिरायां प्रिया तस्य जाता कादम्बरी सुता ॥ ३५ ॥
तया मद्दुःखतुल्यत्वाद्विवाहे नियमः कृतः ।
तां प्रेषिता बोधयितुं सखी तरलिका मया ॥ ३६ ॥
इति स्मृतिनवीभूतशोकया कथिते तया ।
श्रुत्वा संक्रान्ततत्पीडश्चन्द्रापीडोऽनयन्निशाम् ॥ ३७

प्रातर्ज्ञात्वा महाश्वेता ततस्तरलिकागिरा ।
अत्यन्तदुर्ग्रहामेव सखीं चित्ररथात्मजाम् ॥ ३८ ॥
गन्धर्वनगराश्चर्यदर्शनप्रणयार्थिनम् ।
चन्द्रापीडं समादाय कादम्बर्यास्पदं ययौ ॥ ३९ ॥
चन्द्रापीडोऽपि गन्धर्वपुरे रत्नगृहे स्थिताम् ।
कादम्बरीं नयनयोर्ददर्श प्रमदप्रदाम् ॥ ४० ॥
तयोः सकौतुकाकृष्टविलोकनरतोत्सवे ।
मनः परस्परप्रेमसूत्रस्यूतमिवाभवत् ॥ ४१ ॥
प्रेमोद्यानात्कुमारोऽथाकृष्टः स्वनगरीं ययौ ।
पितुः शासनलेखेन पवनेनेव षट्पदः ॥ ४२ ॥
त्वरया न्यस्तसैन्याब्धिं दृष्ट्वा प्राप्तं सुतं नृपः ।
किं वैशम्पायनं त्यक्त्वा संप्राप्तोऽसीत्यभर्त्सयत् ॥ ४३ ॥
पश्चात्सैन्ये समायाते तत्रैवावस्थितं वने ।
वैशम्पायनमाकर्ण्य शुकनासः शशाप तम् ॥ ४४ ॥
चन्द्रापीडं प्रभुं त्यक्त्वा जनकं मां च दुर्जनः ।
स्थितस्तत्रैव पक्षीव शुकपाठी शुकस्तु सः ॥ ४५ ॥
कादम्बरीवियोगार्तः सुहृदं दूरवर्तिनम् ।
चन्द्रापीडस्तमन्वेष्टुं प्रययौ शासनात्पितुः ॥ ४६ ॥
महाश्वेताश्रमं प्राप्य साश्रुधारामधोमुखीम् ।
वैशम्पायनवृत्तान्तमपृच्छत्साब्रवीच्च तम् ॥ ४७ ॥
आविष्ट इव संश्लेषं ययाचे चपलः स माम् ।
शुकवच्चाटुकृन्नीतः शापेन शुकतां मया ॥ ४८ ॥
त्वन्मित्रमिति विज्ञाय पश्चान्मोहान्ध्यमाश्रिता ।
श्रुत्वैतद्दुःसहतरं चन्द्रापीडोऽभवद्व्यसुः ॥ ४९ ॥
कादम्बरी प्रियं श्रुत्वा महाश्वेताश्रमे स्थितम् ।
सह्हिताभ्याययौ पूर्वस्थितया पत्रलेखया ॥ ५० ॥

विजीवितं प्रियं दृष्ट्वा मोहं कादम्बरी ययौ ।
इन्द्रायुधं समादाय पत्रलेखाविशत्सरः ॥ ५१ ॥
तदैव सरसस्तस्मादुदतिष्ठत्कपिञ्जलः ।
अभ्येत्य स महाश्वेतां प्रीत्या पृष्टस्तयाब्रवीत् ॥ ५२ ॥
उत्क्षिप्तः पुण्डरीकोऽसौ पृष्टः पश्चान्मया दिवि ।
मामुवाच शशाङ्कोऽहं शप्तस्त्वत्सुहृदामुना ॥ ५३ ॥
मत्तुल्यव्यथयैवार्तिं यास्यस्यपरजन्मनि ।
मया च प्रतिशप्तोऽयं त्वमप्येवं भविष्यसि ॥ ५४ ॥
शापान्तावधि तस्यापि देहमस्य स्वमण्डले ।
मद्वंशजा महाश्वेता जामाता तत्पतिर्मम ॥ ५५ ॥
श्रुत्वाहमेतच्चन्द्रोक्तं पुण्डरीकपितुर्मुनेः ।
श्वेतकेतोः पदं गन्तुं प्रवृत्तस्तत्कथार्पकः ॥ ५६ ॥
वैमानिकः खे व्रजता मया वेगेन लङ्घितः ।
अशपन्मां जवोदग्रं तुरगस्त्वं भविष्यसि ॥ ५७ ॥
ततोऽहमब्धौ पतितः क्षणादश्वः समुत्थितः ।
इन्द्रायुधाभिधः प्राप्तश्चन्द्रापीडस्य वाहताम् ॥ ५८ ॥
अधुना मुक्तशापोऽहं गच्छामि श्वेतकेतवे ।
वक्तुं वृत्तान्तमित्युक्त्वा ययौ व्योम्ना कपिञ्जलः ॥ ५९ ॥
कादम्बरीं लब्धसंज्ञां प्रवेष्टुं वह्निमुद्यताम् ।
वर्षन्निवामृतं चन्द्रः प्रोवाच गगनस्थितः ॥ ६० ॥
त्वं चन्द्रकान्तपर्यङ्के देहं रक्षास्य निर्व्यथा ।
अचिरात्प्राप्तजीवोऽयं भविष्यति पतिस्तव ॥ ६१ ॥
श्रुत्वैतद्वदितं खे च संशयाश्वासिताशया ।
चन्द्रापीडशरीरस्य परिचर्यारताभवत् ॥ ६२ ॥
देशं ततस्तं सहितः शुकनासेन शोकवान् ।
पत्न्या विलासवत्या च तारापीडः समाययौ ॥ ६३ ॥

वैशम्पायनतां यातः पुण्डरीकः क्षितावयम् ।
इति जाबालिकथितं श्रुत्वा जातिः स्मृता मया ॥ ६४ ॥
कपिञ्जलोऽथ मामेत्य समाश्वास्याविशन्नभः ।
महाश्वेताश्रमं गन्तुमुद्यतोऽहं च्युतः श्रमात् ॥ ६५ ॥
बद्धश्चाण्डालजालेन प्राप्तः कुत्सितपक्कणम् ।
चण्डालकन्यया तत्र क्षिप्तोऽहं हेमपञ्जरे ॥ ६६ ॥
न वेद्मि हेतुना केन देवस्योपायनीकृतः ।
शुकेनेत्थं कथितया कथया सह सा क्षपा ॥ ६७ ॥
क्षयं ययौ स्मयेनेव स्मेरविस्मेरतारका ।
कादम्बरीं स्मरन्क्षीब इव राजा समीक्ष्य ताम् ॥ ६८ ॥
पप्रच्छ प्रातराहूय चण्डालीं तामुवाच सा ।
देवः कुमुद्वतीकान्तस्त्वं शंकरशिरोमणिः ॥ ६९ ॥
कादम्बरी विरहिणी स्मर्यतां स्मरसुन्दर ।
माताहं पुण्डरीकस्य पद्मलक्ष्मीरसंशया ॥ ७० ॥
वैशम्पायनतां यातः शापादेष गुरोः शुकः ।
अद्यापि चपलः शापभीत्यायं परिरक्षितः ॥ ७१ ॥
प्राप्ता चण्डालता राजञ्जनस्पर्शभयान्मया ।
इत्युक्त्वा साविशद्व्योम तेजपिञ्जरिताम्बरा ॥ ७२ ॥
जीवं च दयिते स्मृत्वा जहतुः शुकशूद्रकौ ।
चन्द्रापीडः क्षणे तस्मिन्सहसावाप्तजीवितः ॥ ७३ ॥
कण्ठे कादम्बरीं चक्रे रत्नशय्यासनोत्थितः ।
पुण्डरीकश्च तत्काले निर्गतश्चन्द्रमण्डलात् ॥ ७४ ॥
महाश्वेतां समभ्येत्य चक्रे हर्षसुधाप्लुताम् ।
हंसचित्ररथावेत्य गन्धर्वाधिपती ततः ॥ ७५ ॥
दुहित्रोश्चक्रतुः प्रीत्या विवाहोत्सवमङ्गलम् ।
कथयित्वेति वेतालः पप्रच्छ धरणीपतिम् ॥ ७६ ॥

अनुरागोऽधिकः कस्य राजन्नेतेषु कथ्यताम् ।
राजा तमब्रवीन्मन्ये चन्द्रापीडोऽनुरागवान् ॥ ७७ ॥
सुहृद्वृत्तान्तमाकर्ण्य यस्य चेतस्तदास्फुटत् ।
इति श्रुत्वैव वेतालो गत्वा पुनरलम्बत ॥ ७८ ॥

इति चतुर्विंशो वेतालः ।

---

